अद्यापि तां चलचकोरविलोलनेत्रां
शीतांशुमण्डलमुखीं कुटिलाग्रकेशाम्।
मत्तेभकुम्भसदृशस्तनभारनम्रां
बन्धूकपुष्पसदृशौष्ठपुटां स्मरामि॥ ३०॥

अद्यापि मे निशि दिवा हृदयं दुनोति
पूर्णेन्दुसुन्दरमुखं मम वल्लभायाः।
लावण्यनिर्जितमनोहरकामदर्पं
भूयः पुनः प्रतिमुहुर्न विलोक्यते यत्॥ ३१॥

अद्यापि तामरहितां मनसापि नित्यं
सञ्चिन्तयामि सततं मम जीवितेशाम्।
लावण्यभोगनवयौवनभारसारां
जन्मान्तरेऽपि मम सैव गतिर्यथा स्यात्॥ ३२॥

अद्यापीति। चलचकोरस्येव विलोले नेत्रे यस्याः तां शीतांशुमण्डलमुखीं चन्द्रमुखीं, कुटिलम् अग्रं येषां तादृशाः केशाः यस्याः ता, मत्तेभकुम्भस्य मत्तहस्तिकुम्भस्य सदृशौ यौ स्तनौ तयोः भारेण नम्रा ता, बन्धूकपुष्पेण सदृशम् ओष्ठपुटं यस्याः तथाभूतां ताम् अद्यापि स्मरामि॥ ३०॥

अद्यापीति। भूयः अत्यर्थं पुनः प्रतिमुहुः प्रतिक्षणमित्यर्थः यत् यस्मात् न विलोक्यते न दृश्यते अतः मम वल्लभायाः प्रियायाः लावण्येन निर्जितः मनोहरः कामस्य दर्पः येन तादृशं पूर्णेन्दुसुन्दरमुखं निशि रात्रौ दिवा दिवसे च मे मम हृदयं दुनोति तापयति॥ ३१॥

अद्यापीति। नित्यं सततं मनसा अरहिताम् अत्यक्तामपि मनसि स्थितामपीत्यर्थः, लावण्यस्य भोगः स्थितिर्यस्मिन् तादृशं यत्

अद्यापि तां मलयपङ्कजगन्धलुब्ध-
भ्राम्यद्द्विरेफचयचुम्बितगण्डदेशाम् ।
केशावधूतकरपल्लवकङ्कणान्तां
तां नो दुनोति नियतं सुरतं मदीयम् ? ॥ २३ ॥

अद्यापि सा नखपदं स्तनमण्डलेषु
दत्तं मयैव मधुपानविमोहितेन ।
उद्भिन्नरोमपुलकैर्बहुभिः समन्तात्
जागर्ति रक्षति विलोकयति प्रयत्नात् ॥ २४ ॥

अद्यापि या शशिमुखी न कृतागसं मां
सौख्यैर्वचः प्रतिददाति यदेव नक्तम् ।

नवयौवनं तस्य भारः आतिशय्यं भारो यस्याः तां मम जीवितेशां जीवितेश्वरीं जन्मान्तरेऽपि सैव प्राणेश्वरीव यथा मम गतिः स्यात् तथा सततं चिन्तयामि ॥ २२ ॥

अद्यापीति । मलयपङ्कात् चन्दनरसात् जायते इति तज्जः यो गन्धः तस्य लुब्धानाम् अतएव भ्राम्यतां समन्ततो विचरतां द्विरेफाणां भ्रमराणां चयैः समूहैः चुम्बितः स्पृष्टः गण्डदेशः यस्याः तथोक्ताम् अतएव कम्पेन तज्जनितेनेति भावः अवधूतेन चालितेन करपल्लवकङ्कणेन कान्ता रम्या तां तत् मदीयं सुरतम् अद्यापि नियतं मां दुनोति ? न तापयति ? अपि तु तापयत्येव ॥ २३ ॥

अद्यापीति । अद्यापि सा मधुपानविमोहितेन मद्यपानविमुग्धेन मयैव स्तनमण्डलेषु दत्तं नखपदं नखक्षतचिह्नं समन्तात् सर्वतः बहुभिः उद्भिन्नैः रोमपुलकैः रोमाञ्चैः सहेति शेषः जागर्ति तिष्ठति, तत् प्रयत्नात् रक्षति विलोकयति पश्यति च ॥ २४ ॥

अद्यापीति । या सा शशिमुखी चन्द्रवदना उच्चैः अत्यन्तं कृता-

चुम्बामि रोदिमि भृशं पतितोऽस्मि पादे
दासस्तव प्रियतमे ! भज मां स्मरामि ॥ २५ ॥
अद्यापि धावति मनः किमहं करोमि
सार्धं सखीभिरधिवासगृहेषु कान्ते ! ।
कान्तासुगीतपरिहासविचित्रवाद्यैः
क्रीडासुखैरिह तु यातु मदीयकालः ॥ २६ ॥
अद्यापि तां न खलु वेद्मि किमीशपत्नी
सा वा शची सुरपतेरथ कृष्णलक्ष्मीः ।
धात्रैव किं त्रिजगतां परिमोहनाय
सृष्टा कुले युवतिराजिदिदृक्षयेव ॥ २७ ॥

यत्र कृतापराधः सा नक्तं रात्रौ यदा एव वच न प्रतिददाति प्रतिवक्ति, तदैव अहं चुम्बामि चुम्बनार्थं यत्नं करोमीति भावः भृशं रोदिमि, हे प्रियतमे ! पादे चरणे पतितः अस्मि, तव दासः अहं, मां भज इत्येवम् अद्यापि स्मरामि ॥ २५ ॥

अद्यापीति । हे कान्ते ! अद्यापि मनः धावति त्वां प्रतीति शेषः, अहं किं करोमि, अधिवासगृहेषु शयनमन्दिरेषु सखीभिः सार्धं कान्तायाः प्रियायाः सुगीतं शोभनं सङ्गीतं परिहासः विचित्रवाद्यञ्च तैः क्रीड़ासुखैः क्रीड़ानन्दकरैः इह संसारे मदीयकालः यातु गच्छतु ॥ २६ ॥

अद्यापीति । अद्यापि ताम् ईशपत्नी गौरी किमियं ? वा सुरपतेरिन्द्रस्य शची इयं ? अथवा कृष्णपत्नी लक्ष्मीरियं ? वा त्रिजगतां परिमोहनाय युवतिराजिदिदृक्षयेव युवतिनिचयसौन्दर्यदिदृक्षयेवेति भावः कुले महावंशे इति भावः धात्रा सृष्टा किम् ? इति न खलु वेद्मि नावधारयामि ॥ २७ ॥

अद्यापि तां नृपतिशेखरराजकन्यां
सम्पूर्णयौवनमदालसमङ्गगात्रीम् ।
गन्धर्वयक्षसुरकिन्नरराजकन्यां
स्वर्गादिमां निपतितामिव चिन्तयामि ॥ ४३ ॥

अद्यापि तत्सुरतकेलिनिबद्धबुद्धि-
रङ्गोपबन्धपतितो नृप ! सन्नहस्तः ।
दन्तोष्ठपीडननखक्षतरक्तसिक्त-
स्तस्याः स्मरामि रतिबन्धुरगात्रयष्टिम् ॥ ४४ ॥

अद्यापि तां निजवपुःकृतवेदिमध्यां
सत्सङ्गसस्मितसुधां स्तनभारनम्राम् ।

अद्यापीति । अद्यापि सम्पूर्णयौवनमदेन अलसमङ्गं यस्याः तादृशं गात्रं यस्याः तस्याः तामिमां नृपतिशेखरराजस्य राजाधिराजशिरोमणेरित्यर्थः, कन्यां स्वर्गात् निपतितां गन्धर्वयक्षसुरकिन्नरराजकन्यामिव गन्धर्वकन्यामिव यक्षकन्यामिव देवकन्यामिव किन्नरराजकन्यामिव चिन्तयामि स्मरामि ॥ ४३ ॥

अद्यापीति । हे नृप ! तस्याः सुरतकेलौ निबद्धा स्थिता बुद्धिर्यस्य तथोक्तः, अङ्गानाम् उपबन्धेन सम्यक् बन्धनेन पतितः भूमौ निपतितः अहं तया सह अवसादं गतो स्पन्दरहितो इति भावः हस्तौ यस्य तादृशः, दन्तेन यत् ओष्ठपीडनं नखक्षतञ्च तस्मात् यत् रक्तं तेन सिक्तोऽहं रत्या अनुरागेण सुरतेन वा बन्धुरा विषमा गात्रयष्टिः अङ्गयष्टिः यस्याः ताम् अद्यापि स्मरामि ॥ ४४ ॥

अद्यापीति । निजवपुः स्वशरीरमेव कृतं वेदिमध्यं परिष्कृतभूमिमध्यं मदधिष्ठानार्थमिति भावः यया तथोक्तां, वेदिः परिष्कृता

नानाविचित्रकृतमण्डनमण्डिताङ्गीं
सुप्तोत्थितां निशि दिवा न हि विस्मरामि ॥ ४५ ॥

अद्यापि तां कनककान्तिमदालसाङ्गीं
व्रीडोत्सुकाभिजनभीषणवेपमानाम् ।
अङ्गाङ्गसङ्गपरिजृम्भितमोहभङ्गि-
सञ्जीवनौषधमिव प्रमदां स्मरामि ॥ ४६ ॥

अद्यापि तां नववधूसुरताभियोगे
सम्पूर्णकेलिविधिना रचितां कदाचित् ।
पूर्णेन्दुसुन्दरमुखीं हरिणायताक्षीं
उन्निद्रकोकनदपत्रनखीं स्मरामि ॥ ४७ ॥

भूमिरित्यमरः। मम सङ्गेन सङ्गत्या सम्मिता समीकृता सुधा अमृतं यया तां स्तनभारेण नम्रां अवनतां नाना विविधं विचित्रं चारु कृतं यत् मण्डनं भूषणं तेन मण्डितम् अलङ्कृतम् अङ्गं यस्याः तादृशीं सुप्तोत्थितां शयनादुत्थितां तां निशि रात्रौ दिवा च न हि नैव विस्मरामि ॥ ४५ ॥

अद्यापीति । कनककान्तिः काञ्चनप्रभा युतं युतं मदेन मद्यपानेन अलसमङ्गं यस्याः तां व्रीडोत्सुका विहारार्थिनी किन्तु अभिजनानाम् अभितः समन्तात् जनानां भीषणैः भयप्रदर्शनैः वेपमानां कम्पमानां च ताम् अङ्गाङ्गसङ्गेन प्रत्यङ्गसंसर्गेण तस्या इति भावः परिजृम्भिता आविर्भूता इति यावत् मोहभङ्गिः मोहविन्यासः यस्य तथोक्तः अहं तां प्रमदां कान्तां मम जीवनौषधमिव स्मरामि ॥ ४६ ॥

अद्यापीति । नववधूना यत् सुरतं तन्निमित्तम् अभियोगः राज्ञः समीपे आवेदनव्यापार तस्मिन् सम्पूर्णः केलिः विहारः आनन्दः यस्य तादृशः यो विधिः क्रमः तेन कदाचित् रचि तां

अद्यापि तद्विकसिताम्बुजगौरमध्यं
गोरोचनातिलकविन्दुकृतैकदेशम् ।
ईषन्मदालसविघूर्णितदृष्टिपातं
कान्तामुखं नृप ! मया सह गच्छतीव ॥ ४८ ॥

अद्याप्यहं नववधूसुरताभियोगं
शक्नोमि नान्यविधिना रचितुं कदाचित् ।
तद्भ्रातरो ! मरणमेव हि दुःखशान्तौ
विज्ञापयामि भवति त्वरितं सुनीतिः ॥ ४९ ॥

धर्षितां पूर्णेन्दुसुन्दरमुखीं हरिणायताक्षीं मृगायतलोचनाम् उन्निद्राणि विकसितानि यानि कोकनदपत्राणि रक्तोत्पलदलानि तद्वत् नखाः यस्याः तथाविधां ताम् अद्यापि स्मरामि ॥ ४७ ॥

अद्यापीति । हे सखि ! अद्यापि विकसितं यत् अम्बुजं पद्मं तद्वत् गौरं मध्यम् आयतनमित्यर्थः यस्य तादृशं गोरचनायाः यत् तिलकं तस्य विन्दुना कृतः अलङ्कृत इत्यर्थः एकदेशः यस्य तथोक्तम् ईषत् मदेन अलसः विघूर्णितश्च दृष्टिपातो यस्य तथाभूतं तत् कान्तामुखं मया सह गच्छतीव यत्राहं गच्छामि तत्रैव चलतीव ॥ ४८ ॥

अद्यापीति । अद्यापि अहं कदाचित् नववध्वाः स्त्रिया इति भावः सुरताभियोगं सुरतव्यापारम् अन्यविधिना अन्येन विधानेन उपायेनेति यावत् रचितुं कर्त्तुं न शक्नोमि, हे भ्रातरः ! तत् तस्मात् दुःखशान्तौ सन्तापनिवृत्तौ त्वरितं सत्वरं मरणमेव नान्यदित्येवकारार्थः । सुनीतिः सुष्ठु नीतिः भवति इति विज्ञापयामि युष्मानिति शेषः तत् सत्वरं यथा मृत्युः स्यात् तथा विधीयतामिति भावः । इयं कान् प्रत्युक्तिरियम् ॥ ४९ ॥

अद्यापि नोज्झति हरः किल कालकूटं
कूर्मो बिभर्त्ति धरणीं खलु पृष्ठकेन।
अम्भोनिधिर्वहति दुःसहबाड़वाग्निं
अङ्गीकृत सुकृतिनः परिपालयन्ति ॥ ५० ॥

चोरकविकृता चौरपञ्चाशिका समाप्ता।

---

काव्यसंग्रहस्य प्रथमोभागः सम्पूर्णः।

अद्यापीति। हरः शम्भुः अद्यापि कालकूटं हलाहलं न किल उज्झति नैव त्यजति नैवोद्गिरतीत्यर्थः। कूर्मः पृष्ठकेन धरणीं पृथ्वीं बिभर्त्ति खलु धारयत्येव, अम्भोनिधिः दुःसहबाडवाग्निं दुःसहं वाडवानलं वहति धारयति। तथाहि सुकृतिनः पुण्यवन्तः महान्त इति यावत् अङ्गीकृतं परिपालयन्ति रक्षन्ति न तु त्यजन्तीति भावः। तथाचाहं राजसुतां मरणेऽपि न त्यजामीति भावः॥ ५०॥

---

इति बि, ए, उपाधिधारिणा
श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता काव्यसंग्रह-
प्रथमभागव्याख्या समाप्ता।